वासनां शृणु सविस्तरामिहाष्टादशांशगुणमप्रकटाख्यम् या १ ।
संविधाय बुध तेन विहीना त्रिज्यका या १̇ त्रि १ द्विनगज्योत्क्रमजीवा ॥
त्रिज्यया च गुणिता दलिता स्यादिदं $\frac{\text{या.त्रि १̇ त्रिव १}}{\text{२}}$ एव रसरामगुणस्य ।
एवमप्रकटमानकृतिर्या सा हृता त्रिभगुणस्य दलेन $\frac{\text{याव २}}{\text{त्रि १}}$ ॥

तत्कृतिश्च $\frac{\text{यावव ४}}{\text{त्रिव १}}$ रसरामधनुर्वाना-
मुत्क्रमोऽत्र गुणस्य च वर्गः ।
यौ क्रमोत्क्रमगुणस्य च वर्गौ
तद्युतेः $\frac{\text{यावव ८ या.त्रिघ १̇ त्रिवव १}}{\text{त्रिव २}}$ पददलं द्युतिजीवा ॥

तेन चाप्रकटमानकृतिर्याऽभ्याहता याव४ युतिसमा नियमात् स्यात् ।
पक्षयोः समच्छेदापगमेऽपि तौ समावृषगताष्टगुणौ च ॥

यावव ६४̇ या.त्रिघ ८ त्रिवव ८̇ = याव.त्रिव ६४̇

शेषकेण यावव ६४ याव.त्रिव १६ त्रिवव ९ सहितावपि तुल्यौ

याव.त्रिव १६ याव त्रिघ ८ त्रिवव १ = यावव ६४ याव.त्रिव ४८̇ त्रिवव ९

तत्पदग्रहणतोऽपि समौ तौ ।

तत्र चाद्यपद=या.त्रि ४ त्रिव १ मन्यपदं हि

स्यादिदं याव ८̇ त्रिव ३ च यदि वेदमपीत्थम् ॥

याव ८ त्रिव ३̇ तत्पदद्वयवशात् समशब्दो
मानमप्रकटकं द्विविधं स्यात् ।
तत्र चाद्यमिद- $\frac{\sqrt{\text{त्रिव ५ त्रि १̇}}}{\text{४}}$ मन्यदिदं त्रि १ च
त्रिज्यकापरिमितं हि तदत्र ॥

ज्योषितं त्रिगुणालकजीवा तस्य येन नियमेन कियास्ति ।

यस्य कोटिदलजज्यकयाऽस्य स्यात् समा द्विगुणभागजजीवा ॥
इत्थमत्र नियमोऽप्युभयत्र स्यात् परं प्रकृतयोर्यमिदं न ।
अन्यमानमिह तेन गृहीतं चाद्यमानममलं गणितज्ञैः ॥
परोक्तशील्यानवबोधतस्तद्विश्वासतोऽत्राल्पधियां सुतुष्ट्यै ।
वदन्ति ये युक्तिमियं सुदुष्टा ज्ञेया यतः संशयकारिणी सा ॥

पश्चादतः प्राग्गणितेन सूक्ष्म-
सन्नं पदं सावयवं गृहीत्वा २ । १४ । १० ।
तत् त्रिज्यकाघ्नं त्रिभजीवयोनं
वेदोद्धृतं स्याद्धृति–१८ भागजीवा ॥

दोःकोटिभागान्तरजज्यकायाः प्रकारतो वेदशरांश–५४ जीवा ।
अत्र स्फुटा पञ्चपदत्रिभज्याहतित्रिभज्यासहिताऽब्धिभक्ता ॥

धृत्यंशवेदेषुलवज्यकाभ्यां $\frac{\sqrt{\text{त्रि १ त्रि १}}}{\text{४}}$, $\frac{\sqrt{\text{त्रि १ त्रि १}}}{\text{४}}$ ।

तत्कोटिभागज्यकयोश्च वर्गौ $\frac{\sqrt{\text{त्रिव १ त्रिव ५}}}{\text{८}}$, $\frac{\sqrt{\text{त्रिव १ त्रिव ५}}}{\text{८}}$ ।

बाणाः स्वमूलेन २ । १४ । १० युता विहीना
गजै ८ र्हृतास्तत्फलयोश्च मूले ० । ५० । ४ ॥ ० । ३५ । १६ ।
त्रिभज्यया संगुणिते क्रमेण द्विशैल–७२ षड्वह्नि–३६ लवज्यके स्तः ।
एवं च वेदेषु-५४ खवह्नि-३० भागज्याभ्यां च चापान्तरशिञ्जिनी या ॥

यथोक्तवत् सत्र सदा गुणोऽयं ० । २४ । २४ । १५ । ७
त्रिभज्यकायाः खलु चोपपन्नः ।
तद्घ्नत्रिभज्यैव जिनांशजीवा
व्यक्ता भवेद्वासनया बुधानाम् ॥

अन्योन्यदोःकोटिगुणाहती ये
त्रिज्योद्धृते तत्फलयोस्तथैव ।

कोटिज्ययोर्दोर्ज्ययकयोश्च वर्गा-
न्तरं तु यत् तत्सममेव बोध्यम् ॥ १०२ ॥
यच्चापयोर्दृत्तचतुर्थभाग-
स्थयोश्च वर्गान्तरकं ज्ययोर्यत् ।
तच्चापयुत्यन्तरदोर्लवैक-
ज्याघ्नं द्वितीया नियमाज्ज्यका स्यात् ॥१०३॥
तर्कप्रभृत्यखिलशास्त्रविदोऽपि विज्ञा
रेखात्ममूलगणितानवबोधतश्च ।
स्वल्पान्तरान्मदनिष्टफलस्य भीत्या
भ्रान्त्या भ्रमन्त्यणिवदत्र च स्थूलरीत्या ॥ १०४॥
कुण्डावबोधनविधौ परनिर्मितानि
स्थूलप्रकारजनितान्यशुभानि बुद्ध्वा ।
तेन ज्यकागणितवासनया प्रसङ्गाद्
दिक्कुण्डसाधनविधिं प्रवदामि सूक्ष्मम् ॥१०५॥
चतुर्भुजं वृत्तमथार्धचन्द्रं
त्रिकोणकं योनिसमाह्वयं च ।
षडस्रमष्टास्रमथाष्टपत्रं
पद्माह्वयं चापि तु पञ्चकोणम् ॥ १०६ ॥
सप्तास्रकं चेति दशैव कुण्डा-
न्युक्तानि तज्ज्ञैरिह सत्फलार्थम् ।

हस्तद्विहस्तादिफलोन्मितानि
तत्राङ्गुलैः सिद्धमितैश्च हस्तः ॥ १०७ ॥
षष्टिव्यङ्गुलकैरत्राङ्गुलं व्यङ्गुलकं तथा ।
प्रतिव्यङ्गुलषष्ट्या स्याद्गणितार्थं क्रमस्त्वयम् ॥ १०८ ॥
तत्रैकहस्तजक्षेत्रफलं जिन-२४ हतैः ५७६ समम् ।
द्विव्यादिगुणितं तद्धि
द्व्यादिहस्तोद्भवं सदा ११५२ । १७२८ । २३०४ ॥ १०९ ॥
फलमेकभवं द्व्यादिगुणितं द्व्यादिहस्तजम् ।
न हि द्व्यादिकराणां चाङ्गुलवर्गसमं हि तत् ॥ ११० ॥
आयुरारोग्यमैश्वर्यं लभते समबाहुके ।
सूक्ष्मक्षेत्रफले कुण्डे तद्ध्रासो विषमे भुजे ॥ १११ ॥
अन्यैस्त्र्यस्त्रादिकुण्डेषु यैर्भुजा विषमाः कृताः ।
चतुर्भुजेऽपि विषमा भुजाः किं न कृताश्च तैः ॥ ११२ ॥
एकद्विघ्नफलाभ्यां ये पदे ते बाहुविस्तृती ।
स्यातां समयुतौ चाद्ये कुण्डे तुल्यचतुर्भुजे ॥ ११३ ॥
आसन्नमूलग्रहणाङ्गुलो २४ व्यास-२३ । ५६ श्चतुर्भुजे ।
एकहस्ते द्व्यादिहस्तेऽप्येवं साध्यं विचक्षणैः ॥ ११४ ॥
(१)अष्टघ्नात् फलवर्गाच्च पञ्चभक्तात् पदात् पदम् ।

---

विशेषशरणः ।

(१) अस्यैव ग्रन्थस्य मध्यमाधिकारस्थेन १९६तमश्लोकेन

अभीष्टे वर्त्तुले कुण्डे व्यासमानं प्रजायते ॥ ११५ ॥
आसन्नमूलग्रहणाद्व्यासः सप्ताश्वि-२७ संमितः ।
एकहस्ते तथा द्व्यादिहस्तेस्वफलक्रमात् ॥ ११६ ॥
(१)द्वात्रिंशद्गुणितात् पञ्चभक्ताच्च फलवर्गतः ।
मूलमूलं दलेन्द्वाभे व्यासमानं प्रजायते ॥ ११७ ॥
आसन्नमूलग्रहणादङ्गुलान्यष्टवह्नयः ३८ ।
व्यङ्गुलानि दश १० व्यासश्चैकहस्तार्धचन्द्रके ॥ ११८ ॥
समत्रिभुजकुण्डस्य (२)फलवर्गो नृपाहतः ।

---

विशेषशरणः ।

$$\sqrt{\frac{\text{व्या}^{२} \times ९}{८}} = \text{वृ.क्षे.फ} \therefore \text{व्या}^{२} = \frac{\text{वृ.क्षे.फ}^{२} \times ८}{५}$$

$$\therefore \text{व्या} = \sqrt[२]{\frac{\text{वृ. क्षे. फ}^{२} \times ९}{८}}$$ अत उपपन्नम् ।

(१) पूर्वोक्तरीतितोऽर्धवृत्तक्षेत्रफलम् $= \frac{१}{२}\sqrt{\frac{\text{व्या}^{२} \times ५}{८}}$

$$= \text{क्षेफ} \therefore \text{व्या}^{२} = \frac{\text{क्षेफ}^{२} \times १२}{५} \therefore \text{व्या} = \sqrt[२]{\frac{\text{क्षेफ}^{२} \times १२}{[illegible]}}$$

अत उपपन्नम् ।

(२) समत्रिभुजे भुजार्धमाबाधा, तयोर्लम्बवर्गः $= \frac{३\ \text{भु}^{२}}{४}$ ।

$$\therefore \text{फ}^{२} = \frac{३\ \text{भु}^{२}}{४} \times \frac{\text{भु}^{२}}{४} = \frac{३\ \text{भु}^{२}}{१६} \therefore \text{भु}^{२} = \frac{१६\ \text{फ}^{२}}{३}$$

$$\therefore \text{भु} = \sqrt[२]{\frac{१६\ \text{फ}^{२}}{३}}$$ अत उपपन्नम् ।

त्रिभक्तास्तत्पदान्मूलं भुजः स्यादथ तत्कृतिः ॥ ११९ ॥
खत्र्यंशसंयुता कार्या व्यासः स्यात् तत्पदं (१)त्विह ।
न्टपघ्नाद्वा (२)फलाद्वर्गो भैर्हृतस्तत्पदात् पदम् ॥ १२० ॥
व्यासमानं भवेत् तत्र चैकहस्ते भुजो भवेत् २ । १८ ।
कुराङ्गुलादिको व्यासस्तस्मात् पदतः ४६ । ७ किल ॥ १२१ ॥
फलात्(३)खखाष्टवेद-४८००घ्नात् त्र्यद्रिखाद्रिहृतात् पदम् ।

---

विशेषशरणः ।

(१) समत्रिभुजोपरिगतवृत्तस्य व्यासानयनम् । शिरःकोणाभ्यामाधारस्थभुजोपरिगतलम्बरेखाद्वययोगः केन्द्रम् । अतः समत्रिभुजस्य भुजः कोटिः, व्यासार्धं भुजः, व्यासः कर्णः । $\therefore \text{भु}^{\text{२}} + \frac{\text{१}}{\text{४}}\,\text{व्या}^{\text{२}}$ $= \text{व्या}^{\text{२}}$ । $\therefore \text{भु}^{\text{२}} = \frac{\text{३}}{\text{४}}\,\text{व्या}^{\text{२}}$ . $\text{व्या}^{\text{२}} = \frac{\text{४ भु}^{\text{२}}}{\text{३}}$

$\therefore \text{व्या} = \sqrt{\frac{\text{४ भु}^{\text{२}}}{\text{३}}}$ अत उपपन्नम् ।

(२) पूर्वोपपत्तौ $\text{भु}^{\text{२}} = \frac{\text{३}}{\text{४}}\,\text{व्या}^{\text{२}} \therefore \text{भु}^{\text{४}} = \frac{\text{९ व्या}^{\text{४}}}{\text{१६}}$ ।

अथात्र पूर्वं $\text{भु}^{\text{४}} = \frac{\text{१६ फ}^{\text{२}}}{\text{३}} \therefore \frac{\text{९ व्या}^{\text{४}}}{\text{१६}} = \frac{\text{१६ फ}^{\text{२}}}{\text{३}}$

$\therefore \text{व्या}^{\text{४}} = \frac{\text{१६} \times \text{१६ फ}^{\text{२}}}{\text{९} \times \text{३}} = \frac{(\text{१६ फ})^{\text{२}}}{\text{२७}}$

$\therefore \text{व्या} = \sqrt[\text{४}]{\frac{(\text{१६ फ})^{\text{२}}}{\text{२७}}}$ अत उपपन्नम् ।

(३) इत्यादिसूत्राणामुपपत्तयः क्षेत्रप्रदर्शनपूर्वकं ग्रन्थान्ते शेषटि-

वाहुरश्वत्थपत्राभे योनिकुण्डे प्रजायते ॥ १२२ ॥

समत्रिभुजवत् तस्माद्व्यासोऽप्यत्राथ हस्तजे ।
कुण्डे भुजो १८ । ४६ । १६ भवेद्व्यासो-२२ । ५०
ऽङ्गुलाद्यो गणितेन वै ॥ १२३ ॥

इत्येको योनिकुण्डप्रकारः ।

अथ वाऽश्वत्थपत्राभे योनिकुण्डे फलं तु यत् ।
षष्टिवर्ग-३६००गुणादस्मात् चिद्विदन्तै-३२२३हृतात् पदम् ॥
व्यासमानं भवेन्नूनं तद्वर्गार्धपदं भुजः ।
हस्तयोनौ व्यासमानमिदं २५ । २२ । २०
वाहुरयं १७ । ५६ । सदा ॥ १२५ ॥

इति द्वितीययोनिकुण्डप्रकारः ।

एवं षडस्रकुण्डस्य फलवर्गोऽब्धिसंगुणः ।
भैर्हृतस्तत्पदान्मूलं भुजमानं प्रजायते ॥ १२६ ॥
अष्टघ्नाच्च फलाद्वर्गो भैर्हृतस्तत्पदात् पदम् ।
व्यासो भवेद्विनिघ्नोऽसौ भुजो व्यासोऽथ वाऽनिशम् ॥

आसन्नमूलग्रहणाद्धस्त-
कुण्डे भुजस्त्वयम् १४ । ५२ ।
व्यासोऽङ्गुलात्मकश्चायं २८ । ४६
सम्यक् शिल्पविदोदितः ॥ १२८ ॥

---

विशेषशरणः ।

प्पण्यामवलोक्याः । ग्रन्थमुद्रणे विलम्बभियाऽत्र न ताः संरक्षिता इति ।

एमष्टास्त्रकुण्डस्य फलं पञ्चाद्रि-७५ संगुणम् ।
त्रिपञ्च- ५३ विहृतं तस्य मूलं व्यासो भवेद्-ध्रुवम् ॥
शून्यं द्वाविंशतिश्चूनषष्टिः ०।२२।५७ सावयवो गुणः ।
तद्गुणो व्यास एवात्र भुजः स्यादष्टकोणके ॥ १३० ॥

एकहस्ताष्टकोणस्य
व्यास चासन्नमूलतः २८।२३ ।
भुजश्चायं १०।५५ तथा द्व्यादि-
हस्तकुण्डे समानयेत् ॥ १३१ ॥

अथ पद्माख्यकुण्डे तु
स्वफलं गुणितं च तत् ।
शून्याङ्गवह्निभि-३६० र्वह्नि-
वेदसागर-४४३ भाजितम् ॥ १३२ ॥

तन्मूलं व्यासमानं स्या-
दतश्चाष्टास्रवद्भुजः ।
एकहस्ते च पद्माख्ये व्यासो २१।२८।२५
बाहुस्तथा- ८।१६।२८ ऽङ्गुलैः ॥ १३३ ॥

अथान्यथाऽष्टपत्रैस्तु
पद्मकुण्डं वदाम्यहम् ।
शून्यं षट्सप्त मनवो ०।६।७।१४
गुणः सावयवस्त्वयम् ॥ १३४ ॥

फलात् तद्गुणितान्मूलं भुजमानं प्रजायते ।

सोऽष्टास्त्यासगुणकोद्धृतो व्यासो भवेद्ध्रुवम् ॥१३५॥

तत्रैकहस्तपद्माख्ये
भुजः सावयवस्त्वयम् ० । ३८ । ५५ ।
व्यासश्चायं २० । ३ । १२ इत्यादिहस्ते-
ऽप्येवं साध्यं विचक्षणैः ॥ १३६ ॥

फलं पञ्चास्त्रकुण्डोत्थं खनागेन्दु-१८० गुणं हृतम् ।
नगाभ्रभूमिभि-१०७र्लब्धात् परं व्यासो भवेदिह ॥ १३७ ॥
शून्यं पञ्चाग्नयो भूपा ० । ३५ । १६ गुणः सावयवस्त्वयम् ।
तद्गुणो व्यास एवात्र भुजः स्याद्गणितैर्न वै ॥ १३८ ॥

अथैकहस्तपञ्चास्रे
व्यासस्त्वपरतस्त्विह ।
व्यासो २१ । ८ भुजो १८ । १८ भवेन्नून-
मथ सप्तास्त्रकुण्डके ॥ १३९ ॥

फलाच्छून्याम्बरार्क-१२०घ्नाद्भूविनाग-८२१हृतात् पदम् ।
व्यासो भवेद्धि सप्तास्त्रे भुजोऽप्येवं ततः सखे ॥ १४० ॥

शून्यं षड्विंशतिर्भूमिः
षड्बाणा गुणकोऽस्त्वयम् ०।२६।१५६ ।
तद्घ्नव्यासो भुजश्चात्र
दोर्व्यासौ चैकहस्तजौ ॥ १४१ ॥

भु० १२ । ३२ । २१ व्या० । २८ । ० । ५६ ।

इति कुण्डगणितप्रकारः ।

अथ तत्साधनप्रकाराः।

वृत्तकुण्डं निजव्यासदलभ्रमणतो भवेत्।
अर्धचन्द्रं निजव्यासदलवृत्तस्य खण्डकम्॥ १४२॥
त्रिचतुःपञ्चषट्सप्ताष्टास्त्रकुण्डेषु विस्तृतेः।
अर्धेनादौ लिखेद्वृत्तं कार्याः स्वस्वविभागकाः॥ १४३॥
समास्त्वेकैकका रेखाः प्रतिभागं वृतौ ततः।
पूर्णज्यावच्च तेन स्यात् स्वस्वकुण्डास्त्रकाकृतिः॥ १४४॥
संलग्ना वा भुजा वृत्ते देयास्तद्वशतस्त्विह।
स्वस्वास्राकृतिजं कुण्डं यजमानाङ्गुलैर्भवेत्॥ १४५॥
ज्ञाते भुजे वृतावत्र विभागा अप्रयोजकाः।
विभागज्ञानतश्चैवं भुजास्ते चाप्रयोजकाः॥ १४६॥
समत्रिभुजवत् पूर्वं कृत्वा तुल्यत्रिबाहुकम्।
योनिकुण्डे ततो बाहुत्रयमध्याद्भुजाद्बहिः॥ १४७॥
मण्डलार्धत्रयं लेख्यं बाह्वर्धभ्रमणादिह।
एकार्धवृत्तमध्याच्च पार्श्वयोस्तद्भुजाग्रगे॥ १४८॥
कार्ये रेखे च तत्सक्ते चापे त्यक्त्वाऽवशेषकम्।
योनिकुण्डं भवेदाद्यमन्यत्र्यदलयोनिभम्॥ १४९॥
एवं व्यासार्धमानेन वृत्तं कृत्वा चतुर्भुजम्।
भुजतुल्यभुजैस्तत्र लेख्यकोणाच्च पार्श्वयोः॥ १५०॥
भुजार्धकेन्द्रतो वृत्तदले बाह्वर्धमानतः।
कार्ये भुजाद्बहिश्चान्ययोनिकुण्डं च तद्भवेत्॥ १५१॥

पूर्वं व्यासभुजाभ्यां च यथोक्तयोऽष्टास्रकं लिखेत् ।
ततस्तद्बाहुखण्डेन नाह्वार्धात् केन्द्रतः किल ॥ १५२ ॥
वृत्तार्धं बाहुतश्चोर्ध्वं विलिखेद्रासमन्ततः ।
तद्धि तुल्यचतुर्भागं कृत्वा चाद्यतृतीयकौ ॥ १५३ ॥
त्रिभागान्तौ च यौ ताभ्यां तद्बाह्वर्द्धदलमानतः ।
भ्रमणान्मत्स्यमुत्पाद्य तन्मुखं वृत्ततो बहिः ॥ १५४ ॥
यद्वस्ति तद्गते ताभ्यां त्रिभागाभ्यां च रेखिके ।
तद्बाहुखण्डतुल्ये च समन्तात् तेन तद्भवेत् ॥ १५५ ॥
अष्टपत्रात्मकं कुण्डं पद्माख्यं पद्मवच्छुभम् ।
व्यक्ताव्यक्तोपपत्त्यैव सिद्धं सूक्ष्मं मयोदितम् ॥ १५६ ॥
द्वितीयपद्मकुण्डेऽपि साध्यमष्टास्रकं पुरा ।
तद्भुजाद्यन्तचिह्नाभ्यां व्यासार्धाद्भुजमानतः ॥ १५७ ॥
वृत्तत्रिभागभ्रमणान्मत्स्यं कृत्वाऽथ यद्भुजात् ।
बहिःस्थितं च यन्मत्स्यखण्डं पत्रं तदेव हि ॥ १५८ ॥
एवं प्रतिभुजं पत्रादष्टपत्रोद्भवं किल ।
पद्मकुण्डं भवेद्व्यक्ताव्यक्तवासनया परम् ॥ १५९ ॥
द्व्यादिहस्तेषु कुण्डेषु स्वस्वोक्तभुजत्रिरवृती ।
कार्ये ताभ्यां यथोक्त्यैव यजमानाङ्गुलैः किल ॥ १६० ॥
स्वस्वासाकृतिमान्यत्र कुण्डानि प्रभवन्ति च ।
द्व्यादिहस्ताख्यकुण्डेषु फलमूलजिनांशकम् ॥ १६१ ॥
प्रकल्प्य वाऽङ्गुलं तत्र तैर्यथोक्तप्रकारतः ।

एकहस्तोक्तविस्तारभुजाभ्यामेव साधयेत् ॥ १६२ ॥
वासनानवबोधेन बहुधा शुष्कपण्डितैः ।
उक्तं सुस्थूलकुण्डानां साधनं तन्न मे मतम् ॥ १६३ ॥

संवादमेत्युक्तफलेन सम्यक्
तदेव कुण्डं किल सप्रमाणम् ।
नान्यन्मुनीन्द्रोक्तमपीह यस्मात्
प्रत्यक्षसिद्धो न हि वाक्प्रमाणम् ॥ १६४ ॥

अन्तर्बहिःकोणभवं तु कुण्डं
द्विघ्नास्रसंख्याकभुजैरलीकम् ।
यैरुक्तमष्टास्रमहो कथं तै-
स्त्र्यःष्यस्रकं चापि तथाऽऽहतं न ॥ १६५ ॥

समन्ततः केवलबाह्यकोणैः
सिद्धानि बाह्वग्रयुतेर्भवन्ति ।
अःष्यस्रवत् नोपपडष्टकोणानं
नैमिषस्थो न हि वेत्ति चैवम् ॥ १६६ ॥

अथ कुण्डवासनोच्यते ।

समकर्णसमचतुर्भुजक्षेत्रफलमूलं हि तद्भुजस्तत्कर्णो व्यास इति तावत् सुप्रसिद्धम् । तुल्यभुजयोर्वर्गयोगो हि द्विगुणभुजवर्गः । स तु द्विगुणफलतुल्यस्तत्पदं कर्णः फलमूलं तु भुज इत्युपपन्नं यथोक्ते चतुर्भुजे ।

अथ वृत्तफलं तु व्यासवर्गवर्गात् पञ्चगुणादष्टहृतान्मूलतुल्यमिति तद्विलोमेन व्यासः स्यादित्युपपन्नं यथोक्तं वृत्ते ।

अथार्धचन्द्रकुण्डे तु वृत्तार्धम्। तत्र द्विगुणफलं वृत्तफलं प्रकल्प्य तदर्धमर्धवृत्तफलं स्वफलं स्यात्। अतोऽर्धचन्द्रे व्यासो द्विगुणफलात् साध्यः। द्विघ्नफलवर्गः = फव ४, अष्टघ्नः फव३२, पञ्चभक्तः फव$\frac{३२}{५}$। अस्य मूलमूलं व्यास इत्युपपन्नं यथोक्तम्।

अथ समत्रिभुजे वेदे लम्बादुभयतः सजातीयजात्ये भवतः प्रातिलोम्येन तद्योगे चायतं स्यात्। तत्फलं स्वाभिमतं ज्ञातमेव। तदायते भुजो भुजार्धं कोटिस्तु लम्बः। स तु भुजभुजार्धयोर्वर्गान्तरपदरूप इति मूलापदयाद्वर्गद्वारैव भुजकोटिघातरूपायतफले क्रियमाणे फलवर्गोऽयम् = $\frac{\text{भुवव ३}}{१६}$। विलोमिनाथ फलवर्गो षोडशगुणस्त्रिभक्तस्तन्मूलमूलं भुज इत्युपपन्नम्।

वृत्ते स चायं भुजस्तु द्विगुणा षष्टिभागज्या। षष्टिभागज्यावर्गरूपमिदम् $\frac{\text{त्रिव ३}}{४}$। त्रिज्या तु व्यासार्धमित्येवं वा $\frac{\text{व्याव ३}}{१६}$। अत्र मूलं द्विघ्नं चतुर्गुणितान्मूलं वा तुल्यमिति चतुर्घ्नं $\frac{\text{व्याव ३}}{४}$ तन्मूलं समत्रिभुजभुज इति तद्विलोमेन भुजवर्गो द्वित्रिघ्नात् त्रिभक्ताच्च मूलं स्वल्पान्तरयुतभुजवर्गान्मूलरूपेण कथितं व्यासः स्यादित्युपपन्नं यथोक्तम्।

यद्वा पूर्वोक्तो भुजोऽयम् $\sqrt[२]{\frac{\text{फव १६}}{३}}$। अस्य वर्गश्चतुर्गुणस्त्रिभक्तोऽस्य मूलं वर्गवर्गो वा षोडशगुणो नवभक्तो—$\frac{\text{फव २५६}}{२७}$ ऽस्य मूलमूलं व्यास इति वासनाविदां स्पष्टतरम्।

अथाद्ययोनिकुण्डे तु समत्रिभुजमेकं तदेककोणात् पार्श्वयोर्भुजसमव्यासोद्भवे वृत्तार्धे तयां भुजार्धोद्भवतुल्यचतुर्भुजार्धं चेति

तत्फलैक्यं स्वफलं ज्ञातमेव तथान्यरीत्या फलम्। एवं भुजप्रमाणं यावत्तावत् (या १)। अस्मात् समत्रिभुजफलम् $= \frac{\text{याव}(१।४३।५५)}{४}$।
वृत्तार्धयोः फलम् $= \frac{\text{याव}(३।९।४४)}{४}$। चतुर्भुजफलम् $= \frac{\text{याव }१}{४}$।
चयैक्यम् $\frac{\text{याव}(५।५३।३९)}{४}$। इदं स्वफलेन सममिति पक्षौ याव (५।५३।३९) = याव० फ ४। अत्राव्यक्ताङ्केनाब्धिघ्नं फलं भाज्यमिति गुणहरौ खखार्कैर्गुणितौ जातौ गुण-४८०० हारौ-७०७३ इत्युपपन्नं यथोक्तम्।

द्वितीयप्रकारे तु समकर्णतुल्यचतुर्भुजमेकं तथैककोणाश्रितभुजयोर्व्यासरूपयोर्ये वृत्तार्धे तदैक्यरूपवृत्तं चेति तत्फलैक्यं स्वफलं ज्ञातमेव तथान्यरीत्या फलमेवं चतुर्भुजकर्णो हि तद्व्यासस्तत्प्रमाणं यावत्तावत् (या १)। अस्य वर्गार्धं चतुर्भुजफलम् $= \frac{\text{याव }१}{२}$। अस्य मूलं चतुर्भुजे भुज इति तत्तुल्यव्यासे वृत्तफलम् $= \frac{\text{याव}(०।४७।२६)}{२}$। फलयोर्योगः $= \frac{\text{याव}(१।४७।२६)}{२}$।
स्वफलेन सममिति पक्षौ याव (१।४७।२६) = याव० फ २। अत्राव्यक्ताङ्केन द्विगुणं फलं भाज्यमिति गुणहरौ खखाष्टेन्दु-१८०० गुणौ गुण-३६०० हारौ-२२२२ इत्युपपन्नं यथोक्तम्।

अथ षडस्रभुजो हि सर्वत्र वृत्तव्यासार्धसमः। तत्तुल्य एको भुजो व्यासार्धतुल्यौ च द्वाविति समत्रिभुजम्। तत्तुल्यानि षड् वृत्ते भवन्ति। तत्रैकसमत्रिभुजे प्रोक्तवत् फलवर्गोऽयम् $= \frac{\text{व्यावव }३}{२५६}$। अस्य पदं षड्घ्नं सर्वफलमित्ययं वा षड्वर्गघ्नः सर्वफलवर्गोऽयम् $= \frac{\text{व्यावव }२७}{६८}$। अतो विलोमेन फलवर्गो-

ऽग्निषड्गुणो भेदितस्तन्मूलमूलं व्यासस्तदर्धं भुज इति तद्व-र्गवर्गः षोडशभक्त एव फलितः फलवर्गोऽग्निगुणो भेदित इत्यु-पपन्नम् ।

अथाष्टास्रे सार्धद्वाविंशति (२२ । ३०) भागज्या द्विगुणा भुजो-ऽस्तीति तावत् सुप्रसिद्धम् । तत्र शरवेदभागज्यावर्गः $= \frac{\text{त्रिव १}}{\text{२}}$ । अस्य मूलं शरवेदभागज्या = त्रि (० । ४२ । २६) । त्रिज्यातः शुद्धा जाता शरवेदभागानामुत्क्रमज्येयम् = त्रि (० । १७ । ३४) "त्रिज्योत्क्रमज्याभिहते–" त्रिव (० । १७ । ३४) दलस्य त्रिव (० । ८ । ४७) मूलं सा द्विद्विभागज्येति चतुर्गुणदलार्ध-त्रिव (० । ३५ । १८) मूलं द्विगुणा सार्धद्विद्विभागज्याऽष्टास्रभुजरूपा त्रि(०।४५।५४) । व्यासार्धं त्रिज्येत्ययं वाऽष्टास्रभुजः = व्या(०।२२।५७) । अत्रैको भुजो भुजौ व्यासार्धतुल्यौ च द्वौ भुजाविति त्रिभुजम् । तादृ-शान्यष्टावष्टास्रे भवन्ति तत्रैकस्य फलम् = व्याव (० । ५ । १८) अष्टघ्न-मष्टास्रे फलम् = व्याव (० । ४२ । ४) । अतः फलमनेन (० । ४२ । २४) भक्तं तन्मूलं व्यासः स्यादष्टास्रे । तत्र संचारेण फलं पञ्चसप्ततिगुणं त्रिपञ्चाशद्विहृतं तत्पदं व्यास इत्युपपन्नं यथोक्तम् ।

अथ पद्मकुण्डे यदष्टास्रं तत्फलमेकं तथा तद्भुजार्धो-द्भवतुल्यचतुर्भुजान्यष्टसंख्याकान्यष्टास्रे । तत्फलं भुजवर्गद्विघात-तुल्यं तथा भुजतुल्यव्यासवृत्तस्य फलाष्टांशरूपविषमत्रिकोण-फलानि षोडशसंख्याकानि द्विगुणतद्वृत्तफलतुल्यानीति सर्वफलं स्वफलतुल्यं जातमेव । तथान्यरीत्या फलमेवम् । एतदष्टास्रे भुजः = व्या (० । २२ । ५७) । अस्य वर्गः-व्याव (० । ८ । ४६ । ४२) वर्गः = व्यावव (० । १ । १७ । २) पञ्चगुणः व्यावव (० । ६ । २५ । १५) अष्ट-

भक्ताः व्याव (० । ० । ४८ । ८) चतुर्गुणस्यास्य व्याव (० । ३ । १२ । ३६) मूलं भुजतुल्यव्यासवृत्तफलं द्विगुणम् व्याव (० । १३ । ५२ । ४२) तथा भुजवर्गद्विघातसुल्यं फलम्=व्याव (०।१७ । ३३ । २४)। तथाऽष्टास्रफलम्=व्याव ( ० । ४२ । २४)। फलत्रययोगः स्वफलमिदम् =व्याव (१। १३ । ५०) यतो विलोमेन फलमनेन १ । १३ । ५० भक्तं तन्मूलं व्यासस्तत्र सवर्णितो हरः सुखार्थं गृहीतः ४४३० । तेन फलस्य गुणो ३६० हर-४४३ चेत्युपपन्नं यथोक्तम् । यथैकहस्तमपि फलं गुणगुणं हरभक्तं व्यासवर्गः=४६८ । ५ । एतन्मूलं व्यासः =२१ । ३८ । ७ । भुजश्च ८ । १६ । ३१ । अष्टास्रफलम् =३३० । ४६ । ४४ चतु० १२६ ।५७। ३७। वृत्त० १०८ । १६ । १३।

अथ द्वितीयपद्मकुण्डोपपत्तिः ।

> अष्टास्रभुजसंभूतात् समत्रिभुजतः फलम् ।
> द्विगुणाष्टास्रकभुजाढ्यामावृत्तफलं तु यत् ॥
> तत्पदंशमितं चान्यत् फलं चान्तरकं तयोः ।
> युक्तं पंडशकफले पत्रस्यैकं फलं भवेत् ॥
> तदष्टघ्नं भवेत् पद्मे तथाष्टास्रफलं युतम् ।
> यथोक्तमेव पद्माख्ये फलं तत् सकलं यथा ॥

एकहस्ते चैकपत्रे त्रिभुजस्य फलम् २५ । २६ । ४२ । २५ तथा । फलं वृत्तस्य षष्ठांशे ३० । ५७ । ४२ । २० तथा तद्विवरोऽयम् ५ । ३० । ५८ । ५५ ॥

तत्पडंशकयोगैकपत्रजं ३ । २८ । ४२ । १५ चाष्टकं गुणम् । पद्मे पत्राष्टकफलं २८९ । ४९ । २८ भवेत् तत्-तेन संयुतम् ॥ यदष्टास्रफलं २८४ । १० । २१ तत् तु सूक्ष्मं पद्मफलं भवेत् । यथेप्सितं द्वि तत्सिद्धिरव्यक्तगणितादपि ॥

अत्राष्टास्रभुजप्रमाणं यावदेकम् या १ । त्रिभुजफलवर्गः = यावव (० । ११ । १५) । अस्य मूलं याव (० । २५ । ५१) । वृत्तषडंशफलवर्गः = यावव (० । १६ । ४०) । अस्य मूलं फलम् = याव (० । ३१ । ३०) फलान्तरम् = याव (० । ५ । ३८) । वृत्तषडंशफलेन युतमेकपद्मफलम् = याव (० । ३७ : १५) । अष्टघ्नमष्टपद्मजम् = याव (४ । ५८) । यथाष्टास्रफलं भुजः या १ हरेणानेन ० । २२ । ५७ भक्तो व्यासः = $\frac{\text{या १}}{\text{० । २२ । ५७}}$ । व्यासवर्गः = $\frac{\text{याव १}}{\text{० । ८ । ४६}}$ । अयं विमघ्नगुणः पश्चाद्विभक्तः फलम् = याव (४ । ५० । ११) अष्टास्रे । इदमष्टपद्मजफलेन युतं जातं पद्मकुण्डफलम् = याव (८ । ४८ । ११) अतः फलम् ८ । ४८ । ११ अनेन भक्तं भुजवर्गमानं स्यात् तत्र संचारः । हरेऽस्मिन् रूपं गुणस्तदा रूपमिते हरे को गुण इति लब्धो गुणः = (० । ६ । ७ । १४) तद्गुणितकुण्डफलस्य भुज इत्युपपन्नम् ।

अथ पद्मास्रे द्विगुणा षट्त्रिंशदंशज्या भुजोऽस्ति । षट्त्रिंशज्या = त्रि (० । ३५ । १६) वा व्या (० । १७ । ३८) । इयं द्विगुणा पद्मास्रे भुजः = व्या (० । ३५ । १६) । अत्र तत्तुल्यभूमौ व्यासार्धतुल्यभुजाभ्यां योऽवस्रस्तदुभयतस्त्र्यस्रयोरैक्यादायतमुत्पाद्य तत्फलं फलपञ्चमांशरूपं पञ्चगुणं च पद्मास्रे फलं स्यात् । तत्र भुजार्धं भुजः = व्या (० । १७ । ३८) । व्यासार्धं कर्णस्तद्वर्गान्तरमूलं लम्बः = व्या (० । २४ । १७) । आयते लम्बः कोटिर्भुजार्धं भुज इति तद्घाते फलम् = व्याव (० । ७ । ८) आयते । पञ्चघ्नं स्वफलम् = व्याव (० । ३५ । ४०) । अतो विलोमेन फलम्-

नेन ० । ३५ । ४० भक्तं व्यासवर्गं इति सवर्णितो हरो गृहीतः २१४० तेन फलस्य गुणः = ३६०० । हरश्च = २१४० । विंशत्याऽपवर्त्तनाद्गुणहरौ १८०, १०७ वेत्युपपन्नं यथोक्तम् ।

द्विगुणा(१) वृत्तमन्वंशज्यका पूरं । ३ । ५२ समासके भुजः ।
यष्टिव्यासार्धतः स्वीयकुण्डव्यासार्धतोऽस्त्ययम् व्या (० । २६ । १ । ५६) ॥
भूर्भुजोऽत्र भुजौ व्यासखण्डतुल्यौ चिबाहुके ।
समत्र तत्फलं कुण्डे फलं व्याव(० । ४१ । ३)स्यात् तेन तत्फलम् ॥
अनेन ० । ४१ । ३ व्यत्ययाद्भक्तं व्यासः स्यात् तत्परं किल ।
हरे लब्धिम् ८२१ गुणयाय-१२०० मित्यस्ति फलवासना ॥
अथ वा कुण्डक्षेत्रफलं स्वगुणगुणितं तन्मूलं भुजो व्यासश्च ।
सूक्ष्मासन्नतया ग्राह्यं मूलमासन्नसंज्ञकम् ।
वस्तुभूतपदप्रख्यं कार्यं रेखात्मकं पदम् ॥
अथाष्टोद्दृतायाः करण्याश्च लब्धं तथेष्टं तयोरल्पकं चोत्क्रमज्याम् ।
प्रकल्प्याथ लब्धाङ्कवेष्टाङ्कयोगाद्दलेनाथ वृत्तं लिखेत् तद्वृतौ हि ॥
प्रदत्त्वोत्क्रमज्यां च तन्मध्यसूत्रे ततस्तत्क्रमज्या च रेखात्मिका या ।
तदेव स्वरेखात्मकं मूलमत्र भवेत् तत्करण्याश्च कुण्डादिसिद्धयै ॥
करण्युक्तिवत् स्वेष्टलब्ध्योः करण्योरपीह प्रसाध्ये पदे रेखिकाख्ये ।
तयोरल्पिका चोत्क्रमज्यां प्रकल्प्य तदैक्यार्धविस्तारखण्डोत्थवृत्ते ॥
यथोक्त्या क्रमज्यात्मिका रेखिका स्यात्
करण्यास्तदेवास्ति मूलस्य मूलम् ।
इहाभीष्टभेदात् पदेनैव भेदो
भवेदित्यमार्यैर्भृशं तद्विचार्यम् ॥

---

विशेषवासनाः ।

(१) एतदर्थं शेषवासनाऽवलोकनीया ।

कुण्डानां भुजव्यासगुणकाः ।

| चतुर्भुजम् | वृत्तकुण्डम् | अर्धचन्द्रम् | त्रिभुजम् | प्र. योनिकुं | द्वि. योनिकुं | षडस्रम् | अष्टास्रम् | प्र. पद्मम् | द्वि. पद्मम् | पञ्चास्रम् | सप्तास्रम् | कुण्डानि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १<br>०<br>० | ०<br>०<br>० | ०<br>०<br>० | २<br>१८<br>३३ | ०<br>४०<br>४३ | ०<br>३३<br>३० | ०<br>२३<br>१० | ०<br>१२<br>२४ | ०<br>७<br>७ | ०<br>६<br>७ | ०<br>३८<br>५१ | ०<br>३६<br>३० | भुजगुणकाः |
| २<br>०<br>० | १<br>१५<br>५३ | २<br>३१<br>४७ | ३<br>४<br>४५ | ०<br>५४<br>१७ | १<br>७<br>१ | १<br>३२<br>४० | १<br>२४<br>५४ | ०<br>४८<br>४६ | ०<br>४१<br>५१ | १<br>४०<br>५६ | १<br>२७<br>४१ | व्यासगुणकाः |

इमानि कुण्डानि मयोदितानि

(१)स्वार्षागमप्रोक्तदिशि स्थितानि ।

वृद्धावनौ चाम्बुसमीकृतायां

कार्याणि तज्ज्ञैरिह सत्फलार्थम् ॥ १६७ ॥

यथोदितक्षेत्रफलस्य साम्य-

प्रदर्शनार्थं तु ममैष यत्नः ।

कुण्डस्य होमार्थमिहाथ तत्र-

त्योऽन्यो विशेषः सुधियाऽन्यतन्त्रात् ॥ १६८ ॥

इति कुण्डविचारः ।

---

विशेषशरणः ।

(१) स्वेषां श्रुतिस्मृत्यनुकूमतानुयायिनां ये आर्षागमा वेदब्राह्मणादिप्रमाणानि तत्र प्रोक्ता कथिता या दिग् दिशा कुण्डनिर्माणादेशेति यावत् । तत्र स्थितानि तज्ज्ञैः सत्फलार्थं कार्याणि विशुद्धकुण्डादिगुणिपनैर कुण्डरचना विधेयेति ।

इत्थं हि जीवानयनप्रभेदैः
प्रत्यंशजज्यानयनं विधाय ।
षष्टिघ्नभज्यान्तरतो विलेख्याः
प्रत्यंशजीवा व्यवहारसिद्ध्यै ॥ १६९ ॥

अथात्र जीवानयने भुजांशा
ये तज्ज्यका कोष्ठगताऽस्ति सिद्धा ।
श्रमं विनैवानयनोद्यतानां
ज्योतिर्विदां ज्यागणितोपलब्ध्यै ॥ १७० ॥

लवादधस्तेत् कलिकादिकं स्या-
दतीतभोग्यान्तरखण्डकघ्नम् ।
षष्ट्या हृतं तद्युतयातजीवा
जीवा भवेत् साऽभिमता सुखार्थम् ॥ १७१ ॥

या ज्या विशुद्धा भवति ज्यकाङ्कात्
तच्चापमंशात्मकमस्ति सिद्धम् ।
शेषं तु षष्ट्या गुणितं विभक्तं
ज्यकान्तरेणात्र कलादि लब्धम् ॥ १७२ ॥

युतं लवाद्यं भवतीह चापं
कलीकृतं तद्धि कलात्मकं स्यात् ।
क्रमज्ययोत्या क्रमशिञ्जिनीह
षष्ट्युता कोटिभवक्रमज्या ॥ १७३ ॥

स्यादुत्क्रमज्या यदि खण्डकानि
भुक्तांशखण्डैक्यवशाद्यथोक्ता।
क्रमज्यका सा क्रमखण्डकैः स्या-
द्विलोमखण्डैरिह चोत्क्रमज्या॥ १७४॥

शिरोमणौ ज्यकाभोग्यखण्डं स्पष्टं कृतं तु यत्।
स्थूले सूक्ष्मत्वविश्वासात् तदर्थं किञ्चिदुच्यते॥१७५॥
अन्वयव्यतिरेकाभ्यां चेत् स कोटिः क्रमज्यया।
अनुपातः कथं नो स तथा कोट्युत्क्रमज्यया॥ १७६॥
तुल्यन्यायाद्भवेद्येन त्रिज्यार्धमतिसूक्ष्मतः।
* कोटिज्यकानुपातेन राशिज्या नैव सिध्यति॥ १७७॥
सिद्धभोग्ययुतिद्वारा(१) सर्वभोग्ययुतावधि।
एवं विभज्यका नैत्र किं च सन्धौ तु खण्डयोः॥१७८॥

---

* अत्र विशेषः।

अत्रायं तात्कालिकगतिसिद्धान्तमत्रास्त्येव श्रीभास्करप्रकारं खण्डयति। तात्कालिकगत्यानयनार्थं तु द्रष्टव्यं मत्कृतं दीर्घवृत्तलक्षणम् (२)।

विशेषकारणः।

(१) यदि दशभिरंशैर्भोग्यखण्डं तदा शेषांशैः किमित्यत्र या शेषांशसम्बन्धिनी ज्यावृद्धिः सा च स्थूला पदान्ते चापज्यान्तरस्यापचीयमानत्वात्। अतोऽत्र तथोपायो विधेयो यथा ज्यावृद्धिः सूक्ष्मा भवे-

---

(२) वस्तुतस्तात्कालिकगतिविचारप्रपञ्चस्तत्पूज्यचरणकृत-'चलनकलन'-नामग्रन्थ एवास्ति।

अथात्र यथायथा च-मानमल्पं भवेत् तथातथा तत्कालासन्नवेगेन जीवागतिः स्यात् तेन यदि च-मानं शून्यं तदा जीवायास्तत्कालगतिः

$$= \frac{\text{कोज्याप}}{\text{त्रि}} \text{ । यतस्तदा} \frac{\text{ज्या} \frac{1}{2} \text{च}}{\frac{1}{2} \text{च}} = 1 \text{ ।}$$

( अथ यदि प-चापस्य स्वगत्या पूर्वोक्तथा तात्कालिकी गतिस्तदा प-चापस्य शरद्विदतुसंख्यया गत्या का जाता तद्गतौ जीवातात्कालिकी गतिः

$= \frac{\text{कोज्याप.२२५}}{\text{त्रि}}$ इदमेव तत्कालवेगेन भोग्यखण्डं गृहीत्वा भास्कराचार्येण ग्रहाणां तात्कालिकी गतिः साधिता सा गतिर्यत्र फलमानं परमं भवेत् तत्र शून्यसमा भवत्येव कमलाकर इदं सर्वमज्ञात्वैव श्रीभास्करमतं खण्डयति ) ( १ )

एवं " यातैष्ययोः खण्डकयोर्विशेषः "-इत्यादिविधौ गतखण्डमानं $=$ ज्याग $-$ ज्या (ग $-$ १०)

भोग्यखण्डमानं $=$ ज्या (ग $+$ १०) $-$ ज्याग, खण्डयोरन्तरम्

$= २$ ज्याग $- \{$ ज्या (ग $-$ १०) $+$ ज्या (ग $+$ १०) $\}$

$$= २ \text{ ज्याग} - \frac{\text{२ ज्याग.कोज्या १०}}{\text{त्रि}} = \frac{\text{२ ज्याग . उज्या १०}}{\text{त्रि}} \text{ ।}$$

एवं खण्डयोर्योगमानम् $=$ ज्या (ग $+$ १०) $= \frac{\text{२ कोज्याग.ज्या १०}}{\text{त्रि}}$ ।

विशेषशरणः ।

( १ ) कोष्ठकान्तर्गतविषयस्य महाप्रश्नाधिकारे३१०तमश्लोके विशिष्टं मोपजनम् ।

अथ क्रमेण खण्डान्तरम् $= \frac{२ ज्याग . उज्या १०}{त्रि} = \frac{२ ज्याग . ज्या^2 १०}{त्रि . २ त्रि}$

$\because$ कोज्या$^2$ १० = त्रि$^2$ − ज्या$^2$ १० $\therefore$ आसन्नपदेन कोज्या १०

$= त्रि - \frac{ज्या^2 १०}{२ त्रि}$ $\therefore$ उत्क्रमज्या १० $= \frac{ज्या^2 १०}{२ त्रि}$ । खण्डयोगः

$= \frac{२ कोज्याग . ज्या १०}{त्रि}$ । अथ शेषांशज्या $= \frac{ज्या १० . शे}{१०}$ ।

शेषकोटिज्या $= त्रि - \frac{ज्या^2 १० . शे^2}{२ त्रि . १००} = त्रि - \frac{उज्या १० . शे^2}{१००}$

आसन्नमूलेन ।

अथ गतशेषयोर्योगज्यैवाभीष्टज्या तदानयनार्थं न्यासः ।

$\left\{ \begin{matrix} \frac{ज्या १० . शे}{१०}, & त्रि - \frac{उज्या १० . शे^2}{१००} \\ ज्याग & कोज्याग \end{matrix} \right\}$ $\therefore$ अभीष्टज्या

$= \frac{कोज्याग . ज्या १० . शे}{त्रि . १०} + ज्याग - \frac{ज्याग . उज्या १० . शे^2}{त्रि . १००}$ । ततो

गतज्येष्टज्ययोरन्तरम् $= \frac{कोज्याग . ज्या १० . शे}{त्रि . १०} - \frac{ज्याग . उज्या १० . शे^2}{त्रि . १००}$

$= \frac{खण्डयोगदल . शे}{१०} - \frac{खण्डान्तर . शे^2}{२ \times १००}$

$= \frac{शे}{१०} \left\{ खण्डयोगदल - \frac{खण्डान्तर . शे}{२०} \right\}$ कोष्ठकान्तर्गतफलमेव

भास्कराचार्येण स्फुटभोग्यखण्डं साधितं तत् तु समीचीनमेव कमलाकरो व्यर्थं खण्डयति ।

कोटिज्यकानुपातस्य स्थूलत्वाद् भोग्यखण्डकैः ।
ज्यासिद्धावल्पबुद्ध्या तु यत् कृतं मोढितस्त्वया ॥ १८० ॥
तत् त्याज्यं भोग्यखण्डस्य स्पष्टताकरणं खलु ।
त्यक्त्वा सूक्ष्माणि खण्डानि बलात् सुस्थूलखण्डकैः ॥ १८१ ॥
स्पष्टज्यानयनं तेऽस्ति तदेवं स्पष्टखण्डकम् ।
यातैष्यखण्डभेदघ्नं शेषं खण्डांशकैर्भजेत् ॥ १८२ ॥
तदूनं भुक्तमेवास्ति भोग्यं स्पष्टं भवादृशाम् ।
नास्मादृशामिदं सूक्ष्मज्यकाखण्डकसाधनात् ॥ १८३ ॥

इति ज्यानयनविधिः ।

अथोच्यते मया सूक्ष्मं स्फुटकर्म सवासनम् ।
पूर्वं यादृक् च सिद्धान्ते गदितं रविणा स्वयम् ॥ १८४ ॥

जिष्णुजार्यभटभास्करमुख्यै-
रन्वपूरुषपरम्परयाऽत्र ।
वासना निजधिया निजतन्त्रे
नाश्रिताऽर्करचितानवबोधात् ॥ १८५ ॥
तत्सखेन्दूचितगोलसंस्थां
ज्ञात्वेव योक्ता स्फुटता यथार्थम् ।
सुन्यर्चिता श्रीरविणाऽथ सैवो-
च्यते यतोऽन्यैरुदिता न सम्यक् ॥ १८६ ॥

रवेर्मन्दपरिध्यंशास्त्रयोदश कलास्तथा ।
खसागरायतुस्त्रिंशद्विलिप्ताख्यास्तथा विधोः ॥ १८७ ॥

परिध्यंशाः कुरामाश्च कलाः सप्तार्णवास्तथा ।
द्विद्वितुल्यविलिप्ताश्च तथाऽऽरपरिधेर्लवाः ॥ १८८ ॥
एकलिप्तोनसार्धाग्निपर्वता ७३।२९ बोधनस्य तु ।
द्रुपुलिप्ताढ्यनागाश्विलवा २८।५ देवगुरोस्तथा ॥ १८९ ॥
मुनिलिप्ताढ्यदन्तांशा भृगुजस्य लवा भवाः ।
शनेः षडग्विलिप्ताढ्यसर्याब्ध्यंशाश्च मान्दजाः ॥ १९० ॥
(१)ओजान्तपरिधेर्भागवर्गाद्भांशवर्गतः ।
तत्परिध्यंशवर्गोनैर्भांशवर्गाङ्कैर्हृतात् ॥ १९१ ॥
पदं सदैकरूपास्ते मान्द्राः स्युः परिधेर्लवाः ।
ओजान्तव्यत्ययादित्थं बोजोक्त्या ह्यत्र वासना ॥ १९२ ॥
द्वयब्धिरसा द्वयगिभुवो द्विशैलाः खर्तुदस्रकाः ।
खाब्धयः परिधेर्भागाः शैघ्या भौमात् फलाप्तये ॥१९३॥
ओजान्तेऽर्कोदिताश्चैते युग्मान्ताद्द्व्यधिका गुरौ ।
सैकाः शनौ ज्ञारसितेष्वेकविद्व्यूनिताः क्रमात् ॥ १९४॥
मध्यकक्षाव्यासदलं त्रिज्या यन्मानतः किल ।
तन्मानात्परिधेर्व्यासदलं चान्त्यफलज्यका ॥ १९५ ॥

---

विशेषशरणः ।

(१) अस्य वासना ग्रन्थकृतैव शेषवासनायामतिविशदं विहिता, सैव पूज्यचरणैः सूर्यसिद्धान्ते 'रवेर्मन्दपरिध्यंशा'-इत्यादिपद्यस्य सुधावर्षिण्यां टीकायां नव्यसंकेतैः संरक्षिता तत्र भट्टस्याभिप्रायदौर्बल्यं च मत्पादीति विज्ञैरखिलं विलोक्यम् ।

इयं नृपाः पञ्चवेदा मान्द्रान्त्यफलजज्यका ।
रवेस्तथेषवोऽत्यष्टिस्त्रीषवो हिमदीधितेः ॥ १९६ ॥
साङ्घ्यर्कप्रमिता भौमे विवर्ग्यशाः पवना बुधे ।
गुरौ बाणा द्विधमलाः षडंशोनद्वयं कवेः ॥ १९७ ॥
शनेरष्टौ शरा मान्द्रा क्रमादन्त्यफलज्यका ।
तथैवाष्टाग्नयः शून्यसागरा भूमवश्च च ॥ १९८ ॥
तथा द्विद्विमिताश्चान्द्रेस्तथाऽर्कप्रमिता गुरौ ।
तथा सत्र्यंशरामाब्धिप्रमिता भार्गवे तथा ॥ १९९ ॥
ऋतवः खाब्धयः सौरे शैघ्रान्त्यफलजज्यका ।
भांशत्रिज्याप्रमाणेन परिधेरनुपाततः ॥ २०० ॥

यदुक्तेन शुद्धो यदुक्तस्य केन्द्रं
भवेत् त्रित्रिभैरेकमेकं पदं स्यात् ।
अयुग्मं तु युग्मं क्रमात् तानि चक्रे
भवन्तीह चत्वारि दोःकोटिसिद्ध्यै ॥ २०१ ॥
अयुग्मे पदे यातमेष्यं तु युग्मे
भुजो भाङ्कहीनं त्रिभं कोटिरुक्ता ।
ततः स्वस्वकेन्द्रोत्थदोःकोटिजीवे
परिध्यंशनिघ्न्यौ विभक्ते च भांशैः ॥ २०२ ॥
क्रमात् स्वस्वदोःकोटिसंज्ञे फले स्तः
फलान्त्यज्यया वा हते त्रिज्ययाऽऽप्ते ।
त्रिभज्योद्धृतं दोःफलं यद्यथोक्त्या

फलान्त्यज्यकैवेह वेद्या बुधैः सा ॥ २०३ ॥
मृगादिकर्कादिगते च केन्द्रे
स्वकोटिजीवान्त्यफलज्ययोश्च ।
योगोऽन्तरं कोटिरिहाथ दोर्ज्या
भुजस्तयोर्वर्गयुतेः पदं स्यात् ॥ २०४ ॥
श्रुतिस्तथा कोटिफलत्रिमौर्व्यो-
र्योगोऽन्तरं चात्र यथोक्तकेन्द्रे ।
कोटिश्च तद्दोःफलवर्गयोगा-
न्मूलं स एव श्रवणो भवेद्धि ॥ २०५ ॥
केन्द्रस्य दोर्ज्या गुणिता हतान्त्य-
फलज्यया कर्णहृतान्नचापम् ।
सूक्ष्मं फलं स्यादभवतो हि मध्य-
स्फुटान्तरं शून्यशरे ग्रहस्य ॥ २०६ ॥
त्रिज्याहतं दोःफलमेव कर्ण-
हृतं तु तच्चापमितं फलं वा ।
सुसूक्ष्ममित्थं मृदुनीचमार्ये-
र्निःसंशयं कार्यमिदं ग्रहज्ञैः ॥ २०७ ॥
त्रिज्याहतः(१) कर्णहृतः हतश्चेद्-

---

विशेषशरणः ।

(१) ∵ $\text{मुफ} = \dfrac{\text{ज्याभु} \times \text{ज्याअंफ}}{\text{त्रि}} = \dfrac{\text{ज्याभु} \cdot \text{१}}{\text{भां}}$

यथोक्त आद्यः परिधिः स्फुटः स्यात्।
तस्साधितं दोःफलचापमेव
फलं भवेद्यत्रोक्तफलेन तुल्यम् ॥ २०८ ॥
त्रिज्याहता(१) कर्णहृतैव दोर्ज्या
स्फुटा भवेत् तां परिप्रकल्प्य वा स्यात्।
यथोक्तवद्दोःफलचापमेव
फलं यथोक्तेन फलेन तुल्यम् ॥ २०९ ॥
त्रिज्याहता कर्णहृता हतान्त्य-

---

विशेषकारणः।

$$\therefore \text{ज्याफ} = \frac{\text{ज्याभु} \times \text{ज्याअंफ} \times \text{त्रि}}{\text{त्रि} \times \text{क}} = \frac{\text{ज्याभु} \times \text{प} \times \text{त्रि}}{\text{भां} \times \text{क}}$$

यद्यत्र $\text{ज्यास्फुअंफ} = \frac{\text{ज्याअंफ} \times \text{त्रि}}{\text{क}}$ वा $\text{स्फुप} = \frac{\text{प} \times \text{त्रि}}{\text{क}}$ कल्प्यते

$$\text{तदा ज्याफ} = \frac{\text{ज्याभु} \times \text{ज्यास्फुअंफ}}{\text{त्रि}} = \frac{\text{ज्याभु} \times \text{स्फुप}}{\text{भां}}$$

अतो ज्ञायते यदि भुजफलं फलज्या कल्प्यते तदा स्थूलं फलं वस्तुतस्तु स्फुटा फलज्या कर्णानुपातेनैवातस्तदर्थमन्त्यफलज्यैव स्फुटा वा परिधिरेव स्फुटः कल्पित इति विशेषिस्यम्।

(१) पूर्वश्लोके $\text{ज्याफ} = \frac{\text{ज्याभु} \times \text{ज्याअंफ} \times \text{त्रि}}{\text{त्रि} \times \text{क}}$

$$= \frac{\text{ज्याअंफ}}{\text{त्रि}} \times \frac{\text{ज्याभु} \times \text{त्रि}}{\text{क}} = \frac{\text{ज्याअंफ} \times \text{ज्यास्फुभु}}{\text{त्रि}}$$

अतः सर्वमुपपन्नम्।

फलज्यकैवात्र भवेत् स्फुटाख्या * ।
यत् तद्भुजाद्दोःफलचापमेतत्
सूक्ष्मं फलं वोक्तफलेन तुल्यम् ॥ २१० ॥
त्रिज्याहता कर्णहृता भुजज्या
तच्चापबाह्वोर्विवरं फलं वा ।
ज्ञेयोऽत्र बाहुः प्रतिमण्डलस्य
पूर्वोदितादृभिन्नपदैः स चैवम् ॥ २११ ॥
चापं तु यत् खान्त्यफलज्यकाया-
स्तिभं युतोनोनयुतं तु तेन ।
पदानि तानीह भवन्ति तेषु
बाहुस्य यातैष्यमयुग्मयुग्मे ॥ २१२ ॥
षड्भेद-† जातं सकृदुक्तमित्थं
त्वयासकृत् तत्समसूक्ष्ममेवम् ।
कर्णानुपातात् स्फुटतां विहाय
सर्वत्र यद्दोःफलचापमत्र ॥ २१३ ॥

---

विशेषशरणः ।

* एतदर्थमस्यैवाधिकारस्य १०८ तमश्लोकस्य टिप्पणी विलोक्या ।

† $\text{ज्याफ} = \dfrac{\text{ज्याभु} \times \text{ज्याअंफ} \times \text{त्रि}}{\text{त्रि} \times \text{क}} = (१)\ \dfrac{\text{ज्याभु} \times \text{ज्याअंक}}{\text{क}}$

$= (२)\ \dfrac{\text{ज्याभु} \times \text{ज्यास्फुअंफ}}{\text{त्रि}} = (३)\ \dfrac{\text{ज्याभु} \times \text{ज्यास्फुप}}{\text{त्रि}}$ . .

याचासकृत् साधितमेव सूक्ष्मं
सकृद्यथोक्तेन फलेन तुल्यम् ।
एवं यथाऽत्रैव सकृत्प्रकारा-
दपि स्वमान्दं किल दोःफलं स्यात् ॥ २१४ ॥

सकृद्यथोक्तायथयोर्व्यवस्था-
सन्नं तथाऽहं प्रवदामि सम्यक् ।
गूढस्फुटत्वानवयोर्व्रजात-
मूढभ्रमज्ञानविभञ्जनार्थम् ॥ २१५ ॥

रं सदैकरूपैश्च परिध्यंशैः पुरोदितैः ।
प्त(१)भेदोत्थं साध्यं फलं नेदं कथं घन ॥ २१६ ॥
त्रिज्यागुणान् कर्णहृतान् कृत्वा पूर्वोक्तवत् स्फुटान् ।
गुग्मौजान्तपरिध्यंशास्ततोऽनुपतनात् स्फुटैः ॥ २१७ ॥
ष्टिमध्यपरिध्यंशैः फलं कार्यं विचक्षणैः ।
गुग्मौजान्तपरिध्यंशान् मान्दान् स्पष्टान् वदामि तान् ॥
वैवर्चंशा मनवः सूर्ये दन्तास्त्र्यंशोनिता विधौ ।

---

विशेषवारणः ।

$$= (४) \frac{\text{ज्या।स्फुभु} \times \text{ज्या।अंफ}}{\text{त्रि}} \quad = (५) \frac{\text{ज्या।स्फुभु} \times \text{प.}}{\text{मां}}$$

:(६) ज्या (स्फुभु — भु) अतः षड्भेदजातमित्युपपन्नम् ।

(१) षड्भेदजातं फलं पूर्वमुक्तम् । अथ यदि भुजफलसमामेव
लज्यां मत्वा तच्चापं भुजे संस्कृत्य ततः पुनर्भुजफलमेवासकृत् साध्यते
दा तदपि सूक्ष्मं फलं भवितुमर्हतीति सप्तभेदोद्भवमित्युपपन्नम् ।

ओजान्तोत्थपरिध्यंशाः प्रोक्ता भौमाद्योच्यते ॥ २१९ ॥
ओजे द्व्यंगा वसुयमा रदा रुद्रा गजाब्धयः ।
द्वितीययुग्मपादान्ते सपञ्चांशेन्द्रभागकाः ॥ २२० ॥
रवेरङ्ककलोनेषुत्र्यंशा हिमदीधितेः ।
सत्र्यंशा युग्मनन्दांशाः कुसुते कलयैकया ॥ २२१ ॥
ऊनाः सार्धशरामाश्च बुधे साङ्घ्रिशराग्नयः ।
भागा गुरौ च सत्र्यंशा भवांशा भृगुनन्दने ॥ २२२ ॥
त्रिलिप्तोना रसेष्वंशाः शनौ तुर्यपदान्तजे ।
युग्माख्येऽथ सूर्यस्य सषष्ठांशास्त्रयोदश ॥ २२३ ॥
विधोर्नन्दद्विभागाश्च सप्तांशाः कुजस्य तु ।
सैकलिप्तैकषष्टिस्तु बुधे वह्निकलान्विताः ॥ २२४ ॥
रसद्व्यंशा गुरौ भागा लिप्ताश्चाङ्कद्विसंमिताः ।
कावेर्विंत्र्यंशरुद्रांशाः विन्त्र्यंशत्र्यब्धिभागकाः ॥ २२५ ॥

क्रमादोजयुग्मपरिधिदर्शनम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | मान्दाः परिधयः |
|---|---|---|---|---|---|---|---|
| १३<br>४० | ३१<br>४० | ७२ | २८ | ३२ | ११ | ४८ | ओजपदान्ते |
| १४<br>१२ | ३४<br>५१ | ८२<br>२० | ३०<br>२८ | ३५<br>१५ | ११<br>२० | ५५<br>५७ | द्वितीययुग्मान्ते |
| १३<br>१० | २८<br>१२ | ६१<br>१ | २६<br>३ | २८<br>२८ | १०<br>४० | ४२<br>४० | चतुर्थयुग्मान्ते |
| १३<br>४१ | २२<br>१ | ७६<br>४० | २८<br>१६ | ३२<br>२२ | २१<br>० | ४८<br>१० | सौम्यास्ते युग्मान्ते |

ग्रानेः श्रीरविणा स्वल्पान्तरत्वाद्यघतस्य वै ।
द्वितोयतुर्ययोगार्धे गृहोताः परिधेर्लवाः ॥ २२६ ॥
नाशङ्कनोयं न चले किमित्थं फलवासना ।
विचित्राऽस्ति यतस्तत्र गोलस्थितिविभेदतः ॥ २२७ ॥
यत्रासन्नं युग्मपदं तज्जाद्यं विबुधैरिह ।
अयुग्मं त्वेकमेवोक्तं परिधिज्ञानहेतवे ॥ २२८ ॥
ओजयुग्मान्तरगुणा भुजज्या त्रिज्ययोद्धृता ।
युग्मवृत्ते धनर्णं स्यादोजाढूनाधिके स्फुटः(१) ॥ २२९ ॥
कर्णानुपातजस्पष्टाः परिध्यंशाः पुरा कृताः ।
यथा सूक्ष्मफलार्थं वै तद्वत्त्रापि चाहृताः ॥ २३० ॥

सर्वैः प्रकारैः फलमेकमेव
पूर्वोक्तभङ्ग्यैव यथा ससूक्ष्मम् ।
सिद्धं भवेत् तन्नयका निषद्धुं
ज्योतिर्विदां संशयभञ्जनार्थम् ॥ २३१ ॥

युग्मान्तजादोजपदान्तजातै-
र्मध्येऽनुपातात् परिधेः स्फुटत्वम् ।
फलोपपत्त्या विहितं सदस्ति
जानन्ति नेत्यं जडबुद्धयस्तु ॥ २३२ ॥

---

विशेषशरणः ।
(१) स्फुटः परिधिरिति ।

इत्थं मयोक्तं परिधेः स्फुटत्वं
तदेव यच्छ्रीरविणा मयार्थम् ।
प्रोक्तं खशाखेऽथ परं तु तत्र
संदृश्यते युग्मपदान्तपाठः ॥ २३३ ॥

उक्ताद्विसंवादतया स चायं
प्रायो बुधैरज्ञपरम्परास्थैः ।
प्राङ्नाशितः संप्रति सप्रमाणं
विज्ञैः सभक्त्या नितरां गृहीतः ॥ २३४ ॥

आर्योदितां च ग्रहगोलसंस्थां
ज्ञात्वैव रव्याश्रयपाठ उक्तः ।
स्थित्यन्यथात्वेऽनुगतः प्रसिद्धः
स एव युक्तो मम नाग्रहोऽत्र ॥ २३५ ॥

यद्वाक्फलेऽत्र यवयानुपाते
कृतेऽपि सौरे परिधेः स्फुटत्वम् ।
तद्वासनाविद्भगवान् स एव
नारायणो मण्डलगो(१) न चान्यः ॥ २३६ ॥

वस्तुतस्तु न हि सौरमतस्य
कल्पनां ग्रहभवामवगन्तुम् ।

---

विशेषशरणः ।

(१) सर्वथाऽशरणो भट्टः स्पष्टमिदेव वक्तीति ।

अन्यथा स्थितिवशाद्विपर्ययो-
ऽपि भ्रमोऽत्र जडबुद्धिनरः कः ॥ १३७ ॥

अतीन्द्रियार्थविज्ञानं प्रमाणं श्रुतिरेव हि ।
श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ॥ १३८ ॥

जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी ।
इत्थं शाकल्य एवाह ब्रह्मोक्तस्वनिबन्धने ॥ १३९ ॥

इत्थं कृतैस्तैः परिधिस्फुटांशै-
र्यथोक्तदोःफलचापमेव ।
फलं न कर्णाविधवत् सकृत् स्या-
ज्ज्योतिर्विदां(१) संव्यवहारयोग्यम् ॥ १४० ॥

आर्षोक्तगूढस्फुटतामबुद्ध्वा मान्ददोःफलम् ।
सकृद्देयोदितं स्वोक्तौ भास्कराद्यैर्न(२) सच्च तत् ॥१४१॥

---

विशेषशरणः ।

( १ ) ओजयुग्मपदभेदतः परिधिस्फुटतां विधाय ततो यद्भुजफलं तत् कर्णाभीयं सकृद्-व्यवहारयोग्यमित्येवं वदतो भट्टस्य हृदि मालिन्यमासीत् । वस्तुतः परिधिस्फुटवशतो भुजफलं ततो मन्दकर्णस्तस्मान्मन्दफलमेवमिह वास्तवमन्दकर्णस्याज्ञानात् कथमपि सकृत्कर्मणा स्पष्टं फलं न भवतीति भट्टाशयः ।

( २ ) आर्षोक्तप्रपञ्चस्याकथनेन तदाशयमज्ञात्वैव "ये केन्द्रदोर्ज्ये लघुखण्डकोत्थे" इत्यादिना ये रविचन्द्रयोर्मन्दफले साधिते तत्रासकृत्पदानुपादानात् सकृदेव यत् कृतं तत् सन्देहतः स्फुटप्रमाणवाञ्छित

तुलादिमेषादिगते च केन्द्रे
फलं धनर्णं क्रमशश्च वेद्यम् ।
सुसंस्कृतो मन्दफलेन मध्यो
मन्दस्फुटः स्यादथ वा स्फुटाख्या ॥ २४२ ॥

कर्णानुपातप्रभवा स्वमान्द-
केन्द्रस्य दोर्ज्या विहिताऽस्ति पूर्वम् ।
तच्चापसूत्रेन युतं हि मन्द-
स्फुटोऽथ वेद्यं रविचन्द्रयोर्हि ॥ २४३ ॥

परं तु तच्चापमिहाद्यपादे
चापं तथा द्व्यादिपदक्रमेण ।
विहीनितं चक्रदलात् तदेव
चक्रार्धयुक्तं वियुतं तु चक्रात् ॥ २४४ ॥

---

विशेषशरणः ।

आर्षशरणो भास्कराचार्यविरोधी भट्टो "ये केन्द्रयोर्ज्ये"... इत्यत्र स्फुटकेन्द्रांशव्यासस्य धतः फलज्याग्रानमिति मनसि निधायैव 'सम'—इत्युक्तवान्, एव "मृदुदोःफलस्य चापं बुधा मन्दफलं वदन्ति" अत्रापि प्राचीनशरणस्य भास्करस्य न भट्टाग्रे गतिः । वस्तुतश्च ग्रहग्रहणाधिकारे "मन्दश्रुतिर्द्राक्श्रुतिवत्" इत्याद्युपपत्तिविचारेण "बुधा मन्दफलं वदन्ति"-इह बुधा इति कथनेन कर्णानयने ब्रह्मगुप्तपक्षपाती भास्करः पाठपठितमन्दपरिधिजातमृदुभुजफलं फलज्यासममिति न ज्ञातवानिति स्फुटमिदं च चलनकलनादिनवीनसिद्धान्तस्य प्रयोजनमिति विशेषेऽन्यम् ।

मृदुस्फुटाविव सदाऽर्कचन्द्रा-
चेवं स्फुटौ स्तश्च तयोरभावात् ।
शीघ्रोच्चकस्याथ कुजादिकानां
स्फुटक्रियां वच्मि मृदुद्रुताभ्याम् ॥ २४५ ॥
स्वमन्दफलसंस्कारान्मध्यमः स्यान्मृदुस्फुटः ।
स्वशीघ्रफलसंस्कारात् स्यात् सकृत् स स्फुटग्रहः॥२४६॥
मध्ये शीघ्रफलस्यार्धं मान्दमर्धफलं तथा ।
मध्यग्रहे मान्दफलं सकलं शीघ्रमेव च ॥ २४७ ॥
इत्थं सौरक्रमप्रामाण्यतः स्पष्टक्रियोदिता ।
तत्फलद्वयमेवाहुः पूर्णमार्गविरोधिनः ॥ २४८ ॥

अत्रापि चेन्मान्दवदन्यशीघ्र-
केन्द्रस्य दोर्ज्या क्रियते स्फुटाऽस्याः ।
चापं तु यत् स्वीयमदोद्भवं त-
च्चलोच्चयुतं स्फुटखेचरो वा ॥ २४९ ॥
असकृत् साधितं मान्दं फलमेवं स्फुटार्कतः ।
स्पष्टसूर्ये विलोमेन संस्कृतं मध्यमो भवेत् ॥ २५० ॥
इत्थं सौरोचितं प्रोक्तं सकृद्दोःफलमेव चेत् ।
स्वीयं केवलमर्कोच्च स्फुटं वामं स मध्यमः ॥ २५१ ॥

अथोपपत्तिं द्रष्टुं मध्यमस्य-
कक्षास्थितव्यासदले त्रिभज्या ।

भङ्क्या तदङ्कं स्वदृशीघ्रवृत्त-
व्यासार्धकं स्वान्त्यफलज्यकेन्द्र ॥ २५२ ॥

यथा भगोलोऽस्ति कदम्बमध्यात्
भमण्डलं स्वाङ्कलवैः कुकेन्द्रात् ।
स्वाकाशगोगोलेऽपि तथैव कक्षाः
खे-गामिनां तत्समसूत्रतः स्युः ॥ २५३ ॥

परं तु यत् प्राग्भ्रमणात् खगस्य
केन्द्रस्य भुक्त्या भ्रमतीह बिम्बम् ।
तद्वृत्तकेन्द्रं क्षितिगर्भगं नो
किन्त्वन्तरेऽतोऽन्त्यफलज्यकाग्रे ॥ २५४ ॥

भूकेन्द्रमाद्यं च ततो द्वितीयं
केन्द्रं भवेत् स्वान्त्याफलज्यकाग्रे ।
ताभ्यां विधेये त्रिभजीवयैव
मध्यस्वकक्षाप्रतिमण्डलाख्ये ॥ २५५ ॥

क्रमादथाद्याद्दृशु तद्द्वितीय-
स्पृक्सूत्रमूर्ध्वं कृतमुच्चसंज्ञम् ।
तथैव यच्चापरदेशयातं
नीचाभिधं सूत्रमिलासुकेन्द्रात् ॥ २५६ ॥

यत्रोच्चसूत्रं प्रतिमण्डलेऽस्ति
तत्र ग्रहोच्चं परिकल्पनीयम् ।

तथैव नीचं किल नीचसूत्रं
स्वकक्षिकायामपि तद्वदेव ॥ २५७ ॥
उक्तं हि सूत्राद्वितयं कुगर्भाद्-
दूरस्थितत्वान्निकटस्थितत्वात् ।
तद्वृत्तयोः केन्द्रगते(१)ऽथ तिर्यग्-
गते च सूत्रे सुधिया विधेये ॥ २५८ ॥
तयोर्यदूर्ध्वाधरमन्तरालं
सर्वत्र तत् स्वान्त्यफलज्यकाख्यम् ।
नीचोच्चसूत्राच्च समान्तरेण
तद्वृत्तयोरन्तरगं च सूत्रम् ॥ २५९ ॥
ऊर्ध्वाधरस्वान्त्यफलज्यकाख्यं
सर्वत्र तच्चापि विदाऽवबोध्यम् ।
यच्चस्य बिम्बं प्रतिमण्डलेऽस्ति
तन्मण्डलं च भ्रमतीन्द्रकाष्ठाम् ॥ २६० ॥
केन्द्रस्य भुक्त्यैकदिनेऽथ तेन
बिम्बभ्रमः स्वप्रतिमण्डलात् स्यात् ।
यथेष्टकाले भ्रमणाच्च बिम्बं
भवेच्च तत्स्पृक् चितिगर्भतः स्यात् ॥ २६१ ॥

---

विशेषशरणः ।

(१) अत्र सन्धिः माषादिकः ।

सूत्रं भचक्रे किल यत्र तत्र
मेषादितः स्पष्टखगः फलार्थम् ।
प्रकल्पितः पूर्वमतीन्द्रियज्ञै-
स्तत्साधनार्थं च वदामि युक्तिम् ॥ २६२ ॥

उच्चाद्विलोमं खलु तुङ्गभागै-
र्मेषादिरस्मात् खचरोऽनुलोमम् ।
ज्ञेयस्तदुच्चान्तरमत्र केन्द्रं
तज्ज्या भुजज्या खचरावधि स्यात् ॥ २६३ ॥

तिर्यक् खनीचोच्चकसूत्रतश्च
बाहुस्तथा कोटिरिहाथ वेद्या ।
ऊर्ध्वाधरा मध्यमकक्षिकास्थ-
तिर्यक्स्थसूत्रात् खचरावधिस्था ॥ २६४ ॥

सा कोटिजीवान्त्यफलज्ययोः स्या-
द्योगान्तराभ्यां मृगकर्किकेन्द्रे ।
तद्बाहुकोट्योः कृतियोगमूलं
कर्णः कुगर्भात् खचरावधि स्यात् ॥ २६५ ॥

अथात्र तन्मध्यमकक्षिकायां
तत्कोटिसूत्रं किल यत्र तत्र ।
मध्यो ग्रहो यत्र च कर्णसूत्रं
तत्र स्फुटस्तत्र फलं वदन्तः ॥ २६६ ॥

तत्साधनं च ग्रहबिम्बकेन्द्रा-
दधोमुखे ते द्युतिकोटिसूत्रे ।
कुगर्भतिर्यग्गतसूत्रगा स्यात्
केन्द्रस्य दोर्ज्यैव भुजस्तदन्तः ॥ २६७ ।
बिम्बात् तथैवान्त्यफलज्यकाख्य-
द्युतावपि स्वीयफलाय जात्यम् ।
तत्कर्णसूत्रे च भुजज्यका दोः
तथा स्वबिम्बाल्लघुकर्णसूत्रे ॥ २६८ ॥
अधोमुखे मध्यमखेटबिम्बा-
न्तरस्वरूपान्त्यफलज्यकाख्ये ।
का स्यात् फलज्येत्यनुपाततः
स्यादाद्यप्रकारोऽयमिहोपपन्नः ॥ २६९ ॥
मध्यग्रहं मध्यमकक्षिकास्थं
केन्द्रं प्रकल्प्यान्त्यफलज्यया वा ।
नीचोच्चवृत्तं कुरु मध्यमस्पृक्
कुगर्भतस्तद्धृतिगं च सूत्रम् ॥ २७० ॥
ऊर्ध्वाधरं तद्धृतिगोर्ध्वपाली
लग्नं च तदग्र भवेत् तदुच्चम् ।
नीचं तथाऽधःस्थितपालिलग्नं
तिर्यक्स्थसूत्रं च तयोश्च मध्ये ॥ २७१ ॥

21305

नीचोच्चवृत्तप्रतिवृत्तयोगे
विरुग्रं वरीवर्ति सदैव यस्मात् ।
नीचोच्चमध्ये परिधौ तु भांशा-
ङ्किते स्वबिम्बावधि तुङ्गदेशात् ॥ २

केन्द्रांशकाः स्वप्रतिवृत्तजाता
एवात्र तज्ज्ये भुजकोटिजीवे ।
नीचोच्चसंस्थात् परिधिप्रमाणात्
ते एव दोःकोटिफलाह्वये स्तः ॥ २७३ ॥

यस्मात् तदूर्ध्वाधरसूत्रतश्च
तिर्यक्स्थसूत्राच्च यथा कुमध्ये ।
तिर्यक्स्थसूत्रं भवतीह तस्मा-
न्नीचोच्चतिर्यग्गतसूत्रकं हि ॥ २७४ ॥

भागान्तरस्थं त्रिभजीवया स्या-
दतोऽत्र केन्द्रे मृगकर्किसंज्ञे ।
त्रिज्या तदूर्ध्वाधरसंस्थितत्वात्
त्रिभज्यकाकोटिफलाह्वयोश्च ॥ २७५ ॥

योगान्तराभ्यां भवतीह कोटिः
कुमध्यतिर्यक्स्थितसूत्रतश्च ।
बाहुस्तथा दोःफलमेव ताभ्यां
कर्णः स एवास्ति कुबिम्बमध्ये